# श्रीहनुमत्स्तोत्रं विभीषणकृतम्

श्रीगणेशाय नमः ।

नमो हनुमते तुभ्यं नमो मारुतसूनवे ।
नमः श्रीरामभक्ताय श्यामास्याय च ते नमः ॥ १॥

नमो वानरवीराय सुग्रीवसख्यकारिणे ।
लङ्काविदाहनार्थाय हेलासागरतारिणे ॥ २॥

सीताशोकविनाशाय राममुद्राधराय च ।
रावणान्तकुलच्छेदकारिणे ते नमो नमः ॥ ३॥

मेघनादमखध्वंसकारिणे ते नमो नमः ।
अशोकवनविध्वंसकारिणे भयहारिणे ॥ ४॥

वायुपुत्राय वीराय आकाशोदरगामिने ।
वनपालशिरश्छेदलङ्काप्रासादभञ्जिने ॥ ५॥

ज्वलत्कनकवर्णाय दीर्घलाङ्गूलधारिणे ।
सौमित्रिजयदात्रे च रामदूताय ते नमः ॥ ६॥

अक्षस्य वधकर्त्रे च ब्रह्मपाशनिवारिणे ।
लक्ष्मणाङ्गमहाशक्तिघातक्षतविनाशिने ॥ ७॥

रक्षोघ्नाय रिपुघ्नाय भूतघ्नाय च ते नमः ।
ऋक्षवानरवीरौघप्राणदाय नमो नमः ॥ ८॥

परसैन्यबलघ्नाय शस्त्रास्त्रघ्नाय ते नमः ।
विषघ्नाय द्विषघ्नाय ज्वरघ्नाय च ते नमः ॥ ९॥

महाभयरिपुघ्नाय भक्तत्राणैककारिणे ।

परप्रेरितमन्त्राणां यन्त्राणां स्तम्भकारिणे ॥ १०॥

पयःपाषाणतरणकारणाय नमो नमः ।

बालार्कमण्डलग्रासकारिणे भवतारिणे ॥ ११॥

नखायुधाय भीमाय दन्तायुधधराय च ।

रिपुमायाविनाशाय रामाज्ञालोकरक्षिणे ॥ १२॥

प्रतिग्रामस्थितायाथ रक्षोभूतवधार्थिने ।

करालशैलशस्त्राय द्रुमशस्त्राय ते नमः ॥ १३॥

बालैकब्रह्मचर्याय रुद्रमूर्तिधराय च ।

विहङ्गमाय सर्वाय वज्रदेहाय ते नमः ॥ १४॥

कौपीनवाससे तुभ्यं रामभक्तिरताय च ।

दक्षिणाशाभास्कराय शतचन्द्रोदयात्मने ॥ १५॥

कृत्याक्षतव्यथाघ्नाय सर्वक्लेशहराय च ।

स्वाम्याज्ञापार्थसङ्ग्रामसङ्ख्ये सञ्जयधारिणे ॥ १६॥

भक्तान्तदिव्यवादेषु सङ्ग्रामे जयदायिने ।

किल्किलाबुबुकोच्चारघोरशब्दकराय च ॥ १७॥

सर्पाग्निव्याधिसंस्तम्भकारिणे वनचारिणे ।

सदा वनफलाहारसन्तृप्ताय विशेषतः ॥ १८॥

महार्णवशिलाबद्धसेतुबन्धाय ते नमः ।

वादे विवादे सङ्ग्रामे भये घोरे महावने ॥ १९॥

सिंहव्याघ्रादिचौरेभ्यः स्तोत्रपाठाद् भयं न हि ।
दिव्ये भूतभये व्याधौ विषे स्थावरजङ्गमे ॥ २०॥

राजशस्त्रभये चोग्रे तथा ग्रहभयेषु च ।
जले सर्वे महावृष्टौ दुर्भिक्षे प्राणसम्प्लवे ॥ २१॥

पठेत् स्तोत्रं प्रमुच्येत भयेभ्यः सर्वतो नरः ।
तस्य क्वापि भयं नास्ति हनुमत्स्तवपाठतः ॥ २२॥

सर्वदा वै त्रिकालं च पठनीयमिदं स्तवम् ।
सर्वान् कामानवाप्नोति नात्र कार्या विचारणा ॥ २३॥

विभीषणकृतं स्तोत्रं ताक्ष्र्येण समुदीरितम् ।
ये पठिष्यन्ति भक्त्या वै सिद्ध्यस्तत्करे स्थिताः ॥ २४॥

इति श्रीसुदर्शनसंहितायां विभीषणगरुडसंवादे
विभीषणकृतं हनुमत्स्तोत्रं सम्पूर्णम् ॥